# चम्पूरामायणे

# बालकाण्डम्

०९ – ०८.०१.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- मङ्गलम् – लक्ष्मीं तनोतु, उच्चैर्गतिर्जगति
- चम्पूप्रकारस्य वैशिष्ट्यम् – गद्यानुबन्धरसमिश्रितपद्यसूक्तिः
- रामायणप्रबन्धरचनायाः समर्थनम् – वाल्मीकिगीत
- आदिकाव्योत्पत्तिः – वाचं निशम्य, तत्र कञ्चन, मा निषाद, तदनु समयोचितकृत्यं, वाणीविलासम्, ततः परमहर्षेण, अथ सरसिजयोनेः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- लवकुशयोः रामायणाभ्यासः, गानं च – एनं प्रबन्धं, उपागतौ, एतौ मुनिः, तौ पुनरितस्ततो, छन्दोमयीनां
- दशरथवर्णनम् – अस्ति प्रशस्ता, तामावसद्दशरथः, अथास्मिन्ननपत्यतया, सोऽपि सुमन्त्रवचनात्
- देवैः क्षीरसागरगमनम् – तदनु हविराहरणाय, सन्तापघ्नं, क्षीराम्भोधेः, प्रह्लादस्य व्यसनममितम्, नारायणाय, इति प्रणम्योत्थितान्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः
शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः
त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥

- देवानुद्दिश्य नारायणकृतः कुशलप्रश्नः ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥

- अपि, कुशलम्, अमर्त्याः, स्वागतम्, साम्प्रतम्, वः, शमित-दनुज-दम्भा, किम्, नु, दम्भोलि-केलिः, अपि, धिषण-मनीषा-निर्मिताः, नीतिमार्गाः, त्रिदश-नगर-योगक्षेम-कृत्ये, क्षमन्ते

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥

- हे अमर्त्याः = हे देवाः
- अपि कुशलम्? = क्षेमं वा?
- वः = युष्माकम्
- साम्प्रतम् = इदानीम्
- स्वागतम् = सुखागमनम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥

- दम्भोलिकेलिः – दम्भूलेः = वज्रायुधस्य, केलिः = विलासः
- शमितदनुजदम्भा – शमितः = निवारितः, दनुजानाम् = दानवानम्, दम्भः = कपटः यया तादृशी
- किं नु? = दानवाः विध्वस्ताः किम् इति प्रश्नः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेममकृत्ये क्षमन्ते ॥ १७ ॥

- अपि = किम्
- क्षमन्ते = समर्थाः भवन्ति
- के क्षमन्ते? नीतिमार्गाः = नयपद्धतयः
- कीदृशाः नीतिमार्गाः? धिषणमनीषानिर्मिताः – धिषणस्य = देवगुरोः बृहस्पतेः, मनीषया = बुद्ध्या, निर्मिताः = रचिताः

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥

- कुत्र क्षमन्ते? त्रिदशनगरयोगक्षेमकृत्ये – त्रिदशानां = देवानां, नगरम् = पुरम् (अमरावती), तस्य योगक्षेमकृत्ये = संरक्षणकर्मणि

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
# अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेममकृत्ये क्षमन्ते ॥ १७ ॥

- अन्वयः – अमर्त्याः! अपि कुशलम्? वः साम्प्रतं स्वागतम् । दम्भोलिकेलिः शमितदनुजदम्भा किम्? धिषणमनीषानिर्मिताः नीतिमार्गाः त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते अपि?
- तात्पर्यम् – हे देवाः! क्षेमं किम्? भवताम् इदानीं स्वागतम् । वज्रायुधः दानवानां कपटनाशनं करोति किल? देवगुरोः बृहस्पतेः नयोपायाः अमरावत्याः संरक्षणे समर्थाः सन्ति ननु?

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥

- अमर्त्याः – अकारान्तः, पुं, सम्बोधनप्रथमा.३ । “आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः” (अमरः)
- वः – युष्मद्-शब्दः, ६.३ ।
- शमितदनुजदम्भा – दनुजानां दम्भः, शमितः दनुजदम्भः यया सा

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेममकृत्ये क्षमन्ते ॥ १७ ॥

- दम्भोलिकेलिः – दम्भोलेः केलिः । इकारान्तः, स्त्री, १.१ । "शतकोटिः स्वरुः शम्बो दम्भोलिः अशनिर्द्वयोः" (अमरः)
- धिषणमनीषानिर्मिताः – धिषणस्य मनीषा, धिषणमनीषया निर्मिताः । "बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः", "बुद्धिर्मनीषा धिषणा" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अपि कुशलममर्त्याः स्वागतं साम्प्रतं वः शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गाः त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥

- त्रिदश... – त्रिदशानां नगरम्, योगश्च क्षेमश्च तयोः समाहारः, त्रिदशनगरस्य योगक्षेमम्, त्रिदश...क्षेमस्य कृत्यम् । "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" (अमरः) । अलब्धलाभो योगः, लब्धस्य परिपालनं क्षेमः ।
- क्षमन्ते – "क्षमूष् सहने" (१,आ) – लट्, प्रथम.३
- मालिनीवृत्तम्

एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ।

- एवम्, भगवतः, कुशल-अनुयोग-पुरःसरीम्, अमृत-आसार-सरसाम्, सरस्वतीम्, आकर्ण्य, सम्पूर्ण-मनोरथानाम्, सुमनसाम्, संसत्, पुंसे, परस्मै, विज्ञापयामास ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ।

- एवम् = उक्तप्रकारेण
- भगवतः = नारायणस्य
- कुशलानुयोगपुरःसरीम् = कुशलप्रश्नपूर्विकाम्
- अमृतासारसरसाम् = सुधाधारावत् रुचिराम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ।

- सरस्वतीम् = वाणीम्
- आकर्ण्य = श्रुत्वा
- सम्पूर्णमनोरथानाम् = कृतार्थानां
- सुमनसाम् = देवानाम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ।

- संसत् = समितिः
- परस्मै पुंसे = परमपुरुषाय
- विज्ञापयामास = न्यवेदयत्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ।

- कुशलानुयोगपुरःसरीम् – कुशलस्य = क्षेमस्य, अनुयोगः = प्रश्नः, कुशलानुयोगः पुरःसरः यस्याः सा, ताम् । “कुशलं क्षेममस्त्रियाम्”, “प्रश्नोऽनुयोगः पृच्छा च” (अमरः) । पुरस्+सृ+टच् + ङीप् ।
- अमृतासारसरसाम् – अमृतस्य आसारः, अमृतासार इव सरसा, ताम् । “धारासम्पात आसारः” (अमरः)

# एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ।

- सम्पूर्णमनोरथानाम् – सम्पूर्णः मनोरथः येषां ते, तेषाम्
- सुमनसाम् – “सुपर्वाणः सुमनसः त्रिदिवेशा दिवौकसः” (अमरः) । सकारान्तः, पुं, ६.३ ।
- संसत् – दकारान्तः, स्त्री, १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ।

- पुंसे – सकारान्तः, पुं, “पुंस्”, ४.१
- विज्ञापयामास – वि + “ज्ञा नियोगे” + णिच् – लिट्, १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# देव! कथमकुशलमाविर्भवेद्भवता कृतावलम्बानामस्माकम्? किन्तु...

- देव, कथम्, अकुशलम्, आविर्भवेत्, भवता, कृत-अवलम्बानाम्, अस्माकम् । किन्तु
- हे देव = भोः स्वामिन्!
- कथम् = केन प्रकारेण
- अकुशलम् = अशुभम्
- आविर्भवेत् = उत्पद्येत

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# देव! कथमकुशलमाविर्भवेद्भवता कृतावलम्बानामस्माकम्? किन्तु...

- भवता = महात्मना त्वया
- कृतावलम्बानाम् = दत्ताश्रयाणाम्
- अस्माकम् = नः
- काकुः । निश्चयेन अकुशलं नाविर्भवति
- किन्तु = तथापि (किञ्चिद् विज्ञापनीयमस्ति)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# देव! कथमकुशलमाविर्भवेद्भवता कृतावलम्बानामस्माकम्? किन्तु...

- अकुशलम् – न कुशलम् । नञ् तत्पुरुषः ।
- आविर्भवेत् – आविस् + “भू सत्तायाम्” – विधिलिङ्, प्रथम.१
- कृतावलम्बानाम् – कृतः अवलम्बः येषां ते, तेषाम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# सङ्क्षेपः

- अपि कुशलममर्त्याः – भगवतः कुशलप्रश्नः
- एवं भगवतः – नारायणस्य वाक्प्रसादेनैव तुष्टाः देवाः विज्ञापयन्ति
- देव, कथमकुशलम् – देवानां वचनस्य पीठिका






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in